१०६

दैन्याद्यद्धि क्षितं किंचिन्मानवेनात्र भूतले ।
महता खलु पण्येन तत्क्रीतमिति गण्यताम् ॥

१०७

दोलायमानो गुणदोषपक्षयो–
र्न स्याद्गुणाढ्यः परमार्थतो गुणी ।

१०८

दोषसाम्येऽपि मित्रत्वं गुणसाम्ये यथा नृणाम् ।

१०९

धनलाभेन यावन्तो लोभवन्त इहाभवन् ।
तावन्तो नैव लोभेन धनवन्तः कदाचन ॥

११०

धरणिं जलसेकेन तन्वता सस्यशालिनीम् ।
तुल्यः प्रस्रवणेनेह नरस्त्यागपरायणः ॥

+ + + + + + + +

106

He buys very dear who begs.

PORTUGUESE PROVERB.

107

Virtue that wavers is not virtue. MILTON.

108

Kindred weaknesses induce friendship as often as kindred virtues. BOVEE.

109

Riches have made more men covetous than covetousness has made men rich.

SCOTCH PROVERB.

110

A beneficent person is like a fountain watering the earth and spreading fertility. EPICURUS.

१११

धर्मो वर्म सुदुर्भेद्यं संसाररणयोधिनाम् ।

११२

धिया स्वया तत्त्वं दिशती कल्पनया मुदमादधती ।
कलावती या विनिर्मिता सा विदिता नाम्ना कविता ॥

११३

धीरङ्गनाया हृदयेन नेया धिया च नेयं हृदयं नरस्य ।

११४

धीरस्तु मूर्खस्य कदापि नाम तदीयचित्ते न पुनर्विवेकः ।

---

++ ++ ++ ++ ++ ++ ++ ++

111

Virtue is the strongest shield. MOTTO.

112

Poetry is the art of uniting pleasure with truth by calling imagination to the aid of reason.

JOHNSON.

113

A woman's head is always influenced by her heart; but a man's heart is always influenced by his head. LADY BLESSINGTON.

114

A fool may sometimes have talent, but he never has judgment. LA ROCHE.

---

# त्रयोविंशं रत्नम्
## रमणीरमणीयता

---

आलोके सा मम निपतिता शैशवे वर्तमाना
सौम्याकारा सुरुचिरतरा शर्वरीव प्रभाता ।
सा खेलन्ती कुसुमनिकरैरात्मवन्मन्दहासैः
सानन्दं मे हृदयमकरोत् तद्वदव्याजरम्या ॥ १
पश्चाद्बाला पुनरपि यदा षोडशाब्दा व्यलोकि
रूपं रम्यं विनयमधुरं तत्तदीयं तदासीत् ।
ज्योत्स्नाप्राया तनुरुचिरभूद्गीतकल्पा च वाणी
सेर्ष्यं दृष्ट्वा बहुभिरपि सा धन्यमेकं व्यधत्त ॥ २
तस्या लब्ध्वा पदकमलयोः कान्तमाज्ञाकरत्वं
नीता नैके क्षण इव मया वत्सराः सौख्यभाजा ।
सा पुष्पत्वं झटिति कलिका प्राप्य याता फलत्वं
माता भूत्वा नयनसुभगां यत्तनूजामसूत ॥ ३
सूत्वापत्यं सुतनुरपुषद्यादृशीं रूपशोभां
नासीन्मन्ये तदवधि मया तादृशी दृष्टपूर्वा ।
हा सौन्दर्यं प्रकटमकरोद्यद्दिवं प्रस्थिता सा
नूनं लोके कथमपि तुला तस्य नैवोपलभ्या ॥ ४
दिव्यं तेजः किमपि सुतनुं प्रावृणोत् सर्वतोऽपि
देवः साक्षात् सवितृतनयः पार्श्वभागे स्थितोऽभूत् ।
वाञ्छाशून्यं भयविरहितं जीवितं त्यक्तुकामा
रामा सासीन्मम नयनयोः सर्वथैवाभिरामा ॥ ५

---

# चतुर्विंशं रत्नम्

# रसिकरञ्जनम्

---

सुनिर्मले सरसीसलिले
वसतु मराली सत्कमले ॥ १
मृगनयनानां कुचस्थले
रुचिरा हारलता विपुले ॥ २
सौमनसस्रजि भृङ्गततिः
वाचि तथा मे रसिकमतिः ॥ ३
वीक्ष्य घनालीं मयूरकः
शरत्कौमुदीं चकोरकः ॥ ४
रथाङ्गनामा भानुरुचं
यथा तथेमां मद्वाचम् ॥ ५
विलोक्य सुजनो मुदमेतु
मनोरथं मम सफलयतु ॥ ६
साचि वीक्षितं रमणीनां
मुदमाधत्ते विलासिनाम् ॥ ७
मुग्धजल्पितं बालानां
हरति मानसं प्रौढानाम् ॥ ८
वाङ्मधु मद्वदनाद्गलितं
रसिकमनः कुरुतान्मुदितम् ॥ ९

---

## पञ्चविंशं रत्नम्

## रूपं बलं योषिताम्

---

काप्युरोनिहितकरयुगला
लोलालकपिहितकपोला।
भिक्षार्थमटन्ती बाला
भूपालं समुपससार ॥ १

तस्या वपुरतितरकान्तं
कविवर्णनविषयातीतं
नयनयोर्गोचरीभूतं
मोहयामास भूपं तम् ॥ २

धारयन् सुरुचिरं वेषं
भासयन् निजान्तिकदेशं
अनुहरन् रुचा नाकेशं
विजहौ स निजासनमाशु ॥ ३

सुप्रसन्नवदनो दीनां
भूषितवपुरनलंकरणां
तामधनां स वरो धनिना
मुपयान्तीं प्रत्युदियाय ॥ ४

विस्मयोत्फुल्लनयनेन
गृह्णता करं स्वकरेण
सा सभाजिता भूपेन
निजनिखिलसभाजनपुरतः ॥ ५

मृगनयना मृगाङ्कवदना
संवीतमलिनपरिधाना
सा ददृशे धनसंवरणा
तारापतिमूर्तिः साक्षत् ॥ ६
गुल्फयोर्वल्गुतां कोऽपि
नययो रुचिरतां कोऽपि
कुचयोश्च रम्यतां कोऽपि
प्रशशंस विस्मयात् तस्याः ॥ ७
" इयमसितकुटिलकेशान्ता
ललनाजनललामभूता
क्षितितलागता सुरवनिता "
इत्युदभूत् परितो वाणी ॥ ८
राजापि सत्यवागेवं
निजगाद प्रकटितभावम्
इयमर्हति खलु नरदेवं
भर्तारं परमोदारम् ॥ ९
सा वरानना नृवरेण
बहु शुशुभे तेन वरेण
स च वरो वधूयोगेन
परिपुपोष सुषमामसमाम् ॥ १०

## षड्विंशं रत्नम्
## विद्वद्वचनानुवादः

११५
न किमपि कमनीयं वस्तु यन्न स्वकीयम्।

११६
न कुतोऽपि भयं यस्य बेलन स न हीयते।
ततोऽपि यद्भयं चित्ते सर्वेषामपि वर्तते॥

११७
न चेदुत्साहसंपन्नो धीमान्न विजयी भवेत्।

११८
न जातु विनिवर्तते वदनतो वचो निर्गतम्।

११९
न तच्छ्रेयस्करं किंचिद्यन्न नैसर्गिकं भवेत्।

++ ++ ++ ++ ++ ++ ++ ++

115
Nothing is graceful that is not our own.

COLLIER.

116
He who fears nothing is not less powerful than he whom all fear.

SCHILLER.

117
A man of talent without energy added to it is a failure.

CHAMFORT.

118
A word once uttered can never be recalled.

HORACE.

119
Nothing leads to good which is not natural.

SCHILLER.

१२०

न तथा विश्रमापेक्षौ करौ न नयने अपि ।
यथा जिह्वा मनुष्याणां व्यापृता निजकर्मणि ॥

१२१

न तथा समुपादानाद्यथा खल्वतिसर्जनात् ।
अर्थवत्त्वं नरस्येह जायते शोभतेऽपि च ॥

१२२

न तथोन्नमतां प्रायो नमतां नेदीयसी यथा प्रज्ञा ।

१२३

न तस्य पतनाद्भयं भवति यस्य नीचैःस्थितिः ।

१२४

न त्वं साधुः सुतरां वृत्तिः साधीयसी तवास्ति न चेत् ।
तस्या अपि यादृश्या युक्तोऽसीत्यामनन्ति सुहृदस्ते ॥

++ ++ ++ ++ ++ ++ ++ ++

120

Give your tongue more holiday than your hands r eyes. RABBI BEN AZAI.

121

In this world it is not what we take up, but 'hat we give up, that makes us rich.

WARD BEECHER.

122

Wisdom is oftentimes nearer when we stoop ıan when we soar. WORDSWORTH.

123

He that is down needs fear no fall

JOHN BUNYAN.

124

You are not very good if you are not better ıan your best friends imagine you to be.

LAVATER.

१२५

नामितमेव धनुः क्रियते यदा
निजबलं प्रकटीकुरुते तदा।

१२६

नरः करोति यच्छक्यमीश्वरस्तु यदिच्छति।

१२७

नरेण सामान्यधियापि सर्वं
साध्यं ह्यसामान्यसमुद्यमेन।

१२८

न वैकल्यात्तथा लोभो वैपुल्याज्जायते यथा।

१२९

न स जीवति यः प्राणिति स एव जीवति करोति यः कर्म

++ ++ ++ ++ ++ ++ ++ ++

125

It is only when it is bent that the bow shows its stregth. GRILLPARZER.

126

Man doth what he can, and God what he will.
PROVERB.

127

With ordinary talent and extraordinary perseverance, all things are attainable.
SIR T. E. BUXTON.

128

It is not want but rather abundance that creates avarice. MONTAIGUE.

129

To live is not to breath; it is to act.
ROUSSEAU

१३०

न साधु नासाध्वपि वास्ति किंचित्
तथास्ति तद्यद्धि यथा विभाव्यते ।

१३१

न हसतीति जनः सुजनो भवत्—
हसतु नाम खलः खल एव सः ।

१३२

न हि दण्डनाय नृणां
सृष्टं जगतीह वेधसा कर्म ।
फलदमिदं बलदमिदं
सुखदमिदं खलु यशोदमिदमेषाम् ॥

१३३

न हि दुरुपयोगभयाद्वस्तुनोऽनुपयोगिता प्रतिपादयितव्या ।

---

130

There is nothing either good or bad, but thinking makes it so. SHAKESPEARE

131

A man may smile and smile, and be a villain.
SHAKESPEARE.

132

Work is not man's punishment, it is his reward and his strength, his glory and his pleasure.
GEORGE SAND.

133

Abuse is no argument against use. PROVERB.

# सप्तविंशं रत्नम्

## स्वैरगतित्वम्

---

परवशतामास्थिता कदाचित् ।
कापि सारिका पञ्जर आसीत् ॥ १

स्वैरगतिर्विपिने शुक एकः ।
समचरदनिशं गतभयशङ्कः २

नियतिबलादथ परस्परं तौ ।
तथा स्थितावलोकितवन्तौ ॥ ३

शुकः—प्रिये मया सह चलाशु विपिनं ।
कथमिह रोचयसेऽवस्थानम् ॥ ४

सारिका—इत एहि प्रिय तूर्णं रुचिरे ।
सुखमस्मिन्निवसाव पञ्जरे ॥ ५

शुकः—अहह शलाका न ह्यवकाशं ।
दद्युः कर्तुं पक्षविकाशम् ॥ ६

सारिका—बहिराकाशे कामध्यासे ।
वासयष्टिमिति रतिरिह वासे ॥ ७

शुकः—हृदयवल्लभे वनगीतानि ।
गातुं कुरु मतिमतिमधुराणि ॥ ८

सारिका—उपविश सविधे मयोच्यमानां ।
पठ वाणीं प्रिय विदग्धवचनाम् ॥ ९

शुकः—न गीतपाठः शक्यो दातुं ।
स्वच्छन्दं पक्रमस्व गातुम् ॥ १०

सारिका—वनगीतानामहमनभिज्ञा ।
न हि करणीया प्रिय मदवज्ञा ॥ ११

+:+++++

उत्कण्ठितमपि विहङ्गयुगलं ।
सङ्गसुखं निर्वेष्टुं नालम् ॥ १२
केवलमीक्षामासतुरेतौ ।
दूरत एव परस्परमार्तौ ॥ १३
स्त्री पुरुषं निजगाद स चैनां ।
कुरु संनिधिमिति वाचं दीनाम् ॥ १४

+:+++++

शुकः—अयि दयिते न हि वचनमिदं ते ।
कथमपि कर्तुं मन उत्सहते ॥ १५
कथं पञ्जरे पिहितद्वारे ।
पदं निधेयं कारागारे ॥ १६

सारिका—अहह ममैतौ पक्षौ विकलौ ।
न हि न हि निष्क्रमणेऽतः कुशलौ ॥ १७

शुकः—हा हा मरणसमेयं दयिते ।
स्थितिरनुभवनीया चिरमिह ते ॥ १८

---

# अष्टाविंशं रत्नम्

# किं ज्ञानम्

सन्ति किल बहवो जना ये केवलं जीविकायै शास्त्राण्यधीयते च व्याचक्षते च । न पुनरमीषां शास्त्रज्ञानेन ज्ञानित्वमुपपद्यते । किं हि शास्त्राभ्यासलब्धेन शाब्देन बोधेन यद्यसौ कर्मस्पन्देषु फलितो न दृश्यते । एवंविधाः पुरुषा बुद्धिचातुर्यात् तत्त्वकथाभिः परान् वञ्चयन्तो बोधशिल्पोपजीविनः शिल्पिन एव ।

न हि नाहारार्थं कर्म कर्तव्यं मानुषैः । कर्तव्यमेव । तेन पुनरनिन्द्येन भवितव्यम् । किंप्रयोजन आहारः । प्राणसंधारणार्थः । कुतः खलु संधार्याः प्राणाः । तत्त्वजिज्ञासार्थम् । किं तत्त्वमिह जिज्ञास्यं भवति । येन ज्ञातेन भूयो दुःखं न जायेत । किं तज्ज्ञानं यन्मोक्षाय कल्पते । आत्मज्ञानं विदुर्ज्ञानम् । इतरत्तु ज्ञानावभासमेव ।

# नवविंशं रत्नम्

## सदाचारसारः

---

१

भव सुस्निग्धोऽखिलजीवेषु ।
विश्वासं कुर्वत्यल्पेषु ॥

२

यावच्छक्यं कुरूपकारम् ।
मा कस्यचिदपि पुनरपकारम् ॥

३

स्वभुजबलेन रिपून्वशमानय ।
मित्रगणं प्राणैरपि पालय ॥

४

मितभाषित्वं भज सत्याय ।
मा मुखरत्वं गमोऽनृताय ॥

---

## त्रिंशं रत्नम्
## विद्वद्वचनानुवादः

१३४

**न हि मर्म हृदो निकृन्तती खलजिह्वासदृशी कृपाणिका।**

१३५

**न हि शीघ्रं न जानाति नरः कर्तव्यमात्मनः।**
**मन्दा तु तदनुष्ठाने प्रवृत्तिस्तस्य जायते॥**

१३६

न हि संकल्पानां प्रभवामः। वशंवदाः खलु वयममीषाम्।

१३७

**न हि सुखदं नियमेन हिताय यदिह हितं तु तदेव सुखाय।**

१३८

न हि सुलभसाधनासाधनीयानि महान्ति साध्यानि।

++ ++ ++ ++ ++ ++ ++ ++

134

No sword bites so fiercely as an evil tongue.

SIR P. SYDNEY.

135

How quick to know, but how slow to put in practice, is the human creature. GOETHE.

136

We have little control over our thoughts. We are the prisoners of our ideas. EMERSON.

137

Not that which produces happiness is good, but that only which is good produces happiness.

FICHTE.

138

The way is not easy where the prize is great.

QUARLES.

१३९

**न हि सुवचं सुकरं भवति**

१४०

न ह्यनलमतीत्य गच्छन् धूमावरोधं गणयति ।

१४१

**न ह्यन्याय्यं मान्यतां याति किंचित् ।**

१४२

**नाज्ञातस्य ज्ञापनं शिक्षणस्य**
**ज्ञेयं प्राज्ञैः केवलं कार्यमेकम् ।**
**यस्त्वाचारः सेवनीयोऽत्र पुंसां**
**तत्राप्येषां चोदना तेन कार्या**

139

Easy to say is hard to do. FRENCH PROVERB.

140

Who walks through fire will hardly heed the smoke. TENNYSON.

141

Nothing can be honourable where justice is absent. CICERO.

142

Education does not mean teaching people to know what they do not know, it means teaching them to behave as they do not behave. RUSKIN.

१४३

नादासो वस्तुतः कोऽपि प्रभवत्यात्मनो न यः।

१४६

नानुशोचन्त्युरो घ्नन्तो निजां हानिं विपश्चितः।
प्रयतन्ते तु धैर्येण तर्तुं व्यसनार्णवम्।

१४७

नान्यान् स्थापयितुं शक्तः शासने य इहात्मनः।
नापि वान्यस्य यःस्थातु तेन जातेन को गुणः॥

१४८

नापकर्तुमिहान्येषामलमित्येव केवलम्।
अहो नु खलु साधुत्वं केषांचिदुपजायते॥

++ ++ ++ ++ ++ ++ ++ ++

143

No man is free who is not lord over himself.

CLAUDIUS.

144

Wise men ne'er sit and wail their loss,
But cheerly seek how to redress their harms

SHAKESPEARE.

145

The good-for-nothing is he who cannot command and cannot even obey.

GOETHE.

146

Many a one is good, because he can do no mischief.

PROVERB.

१४७

नास्ति येषां गुणः कोऽपि मौनं तेषां गुणायते ।

१४८

निखिलमपि जगन्नस्तुच्छतां नाम यातु
न पुनरिह विनेदं जीवितुं शक्यमेव ।

१४९

नितान्तगंभीरजला हि नद्यो
जवाद्वहन्त्योऽल्पतरं नदन्ति ॥

१५०

निपुणः कलहाजीवी विगुणः प्रातिवेशिकः ।

---

147

Silence is the virtue of those that want it.

BOUHOURS.

148

We may despise the world, but we cannot do without it.

BARON WESSENBERG.

149

The doepest rivers flow with the least noise.

CURTIUS.

150

A good lawyer is a bad neighbour.

FRENCH PROVERB.

## एकत्रिंशं रत्नम्

# कालक्रमेण हि भवन्ति दशान्तराणि

कालेन रोहति पुनर्विटपी विलूनः
शून्यं प्रकाण्डमपि पुष्पफलं बिभर्ति।
दुःखाम्बुधिं तरति दीनतमोऽपि जन्तुः
कालक्रमेण हि भवन्ति दशान्तराणि॥ १

शोषं गतापि मरुभूमिरवग्रहेण
वृष्ट्यम्बुभिर्भवति नाम कदाचिदार्द्रा।
दुःखं सुखाय भवतीति किमत्र चित्रं
कालक्रमेण हि भवन्ति दशान्तराणि॥ २

यद्वर्धते च विभवाम्बुनिधिर्नरस्य
यत् क्षीयते च नियमेन यथावदेव।
तत्कोऽत्र हेतुरिति चेद्विशदं वदामः
कालक्रमेण हि भवन्ति दशान्तराणि॥ ३

हर्षः परोऽपि समुपैति न नावसानं
शोको न याति मृदुतां न सुदुःसहोऽपि।
हर्षः शुचे भवति शुक् च मुदे कदाचित्
कालक्रमेण हि भवन्ति दशान्तराणि॥ ४

नित्योऽस्ति नैव शिशिरो न हि वा वसन्तो
नो संततैव रजनी दिवसो न नित्यः।

भावा भवन्ति पद्मागमनिर्गमाणां
कालक्रमेण हि भवन्ति दशान्तराणि ॥ ५
ये पत्रिणोऽद्य करुणस्वरमारटान्ति
कालेन तेऽपि किल गानपरा भवन्ति ।
वात्या सुदारुणतरा शममाशु याति
कालक्रमेण हि भवन्ति दशान्तराणि ॥ ६
हा हा पतेयमिति यद्भयमारुरुक्षो—
श्चित्ते तथैव पतितस्य च यारुरुक्षा ।
कस्तत्र हेतुरिति चेद्विशदं वदामः
कालक्रमेण हि भवन्ति दशान्तराणि ॥ ७
लभ्यं न सौख्यमिह यन्न हि दुःखमिश्रं
दुःखं च सौख्यरहितं न हि सर्वथैव ।
पर्यायपातिसुखदुःखतयात्र सर्वे
भवेषु संसृतिभवेष्वनिशं रमन्ते ॥ ८
योऽर्थो विनश्यति सकृद्विधिदुर्विपाकाद्-
दैवानुकूल्यवशतो ननु लभ्यतेऽसौ
मीनं ग्रहीतुमनलं सुविशालकायं
जालं लघोः प्रभवति ग्रहणाय किं न ॥ ९
सर्वस्य किंचिदिह दुर्लभमस्तु नाम
कस्यापि सर्वमपि दुर्लभतां न याति ।
योऽर्थी हि येन नियतं न तदश्नुते सः
कस्यापि नास्ति सकला समभीष्टसिद्धिः ॥ १०

# द्वात्रिंशं रत्नम्

## भयशमनस्तोत्रम्

---

मदनमहीरुहदवदहन
भव शरणं मे भयशमन ॥ १

कामादिकरिपुभयमतुलं
करोति हृदयं मम विकलम् ॥ २

विषमेषुः किल हतस्त्वया
किं न्वनया वाचा श्रुतया ॥ ३

नयनमुदीर्य तमो हर मे
हर विषयेषु पुनर्न रमे ॥ ४

रविसुतवर्त्म मम स्मरतः
दलति विभो हृदयं दरतः ॥ ५

हा हा यमकिङ्करवाणी
श्रुता मया किं करवाणि ॥ ६

हिमकरकिरणसमूहासितं
वह भगवन्नधरे हसितम् ॥ ७

चरणयुगं तव मम शरणं
करोत्वखिलकलिमलहरणम् ॥ ८

---

## त्रयस्त्रिंशं रत्नम्

## विद्वद्वचनानुवादः

१५१

निर्मिमीते बृसीमेकस्तामध्यास्ते नरोऽपरः।

१५२

निष्क्रामति यदा रङ्गाद् घोरा संग्रामदेवता।
प्रविशन्ति सहस्राणि सद्यो व्यसनरक्षसाम्॥

१५३

निसर्गविरुद्धयोरपि सुखदुःखयोरीदृशी किल योजना कृता विधात्रा यदनयोःसाहचर्यमखण्डितमेवावातिष्ठते।

१५४

नूनं त्वां न कदापि विस्मरति यस्तं मान्तकं विस्मर

१५५

नृभ्यः केवलतो नराधिपतयोऽप्येकाकिनो नाधिकाः।

151

One man makes a ch ir and another man sits iu it. PROVERB.

152

Ill comes upon war's back. PROVERB.

153

Pleasure and pain, though directly opposite, are yet so contrived by nature as to be constant companions. CHARRON.

154

Man, forget not death, for death certainly forgets not thee. TURKISH PRO.

155

Kings alone are no more than single men.

PROVERB.

१५६

नृणामग्राह्यतां याति प्रायो विषमिवानृतम् ।
सेव्यते तु तदज्ञानात् स्वादुना संवृतं यदि ॥

१५७

नोपले शैवलसङ्गो जलौघपरिवर्तिनि ।

OR

परिवार्तिनि पाषाणे शैवालं नोपजायते ।

१५८

न्यायाधीशो वृको यस्त्यादीशो मेषस्य तारकः ।

१५९

पतितस्य समुद्धरणात्पततः पतनान्निवारणं श्रेयः ।

१६०

परकीयान् पुरतः करोति दोषान् ।
मनुजः स्वान् बत पृष्ठतः करोति ।

++ ++ ++ ++ ++ ++ ++ ++

156

Falsehood like poison will generably be rejecte( when administered alone, but when blended witl wholesome ingredients may be swallowed un perceived. WHATELY.

157

A rolling stone gathers no moss. PROVERB.

168

God help the sheep when the wolf is judge.
DANISH PROVERB.

159

Keeping from falling is better than helping ur
PROVRRB.

160

We keep the faults of others before our eyes our own behind our backs. SENECA.

१६५
परिगृह्णाति यो भार्यामात्मनोऽधिकगौरवाम् ।
स्वयं सेवकतां यास्यन् स सेव्यं लभते जनम् ॥
१६२
परिपाटीयं महतां यदपूर्णत्वेन किमपि न क्रियते ।
१६३
परिश्रमो मिताहारो द्वौ वैद्यावाश्विनौ भुवि ।
१६४
परेषामनुशोचामस्ता एव वयमापदः ।
अनुभूता भवेयुर्याः प्रायेण स्वयमात्मना ॥
१६५
परैरविदितस्यापि परा विविदिषा पदम् ।
कुरुते यदि ते चित्ते पुरवासमुरीकुरु ॥

---

++ ++ ++ ++ ++ ++ ++ ++

161

Marry above your match, and you get a master.
FRENCH PROVERB.

162

It is the manner of noble souls to do nothing by halves.
WIELAND.

163

Temperance and labour are the two best physicians of man.
ROUSSEAU.

164

We pity in others those evlts which we have ourselves experienced.
ROUSSEAN.

165

If you wonld know and not be known, live in a city.
COLTON.

---

## चतुस्त्रिंशं रत्नम्
## अकालविलयः

१

अयि सुकुमारशरीरा
नयनहराः फलदपादपप्रसवाः ।
निपतथ धरणीपृष्ठे
किमित्यकाले त्वरान्विता एवम् ॥

२

हा हा भवतामियता
समयेनायुः समाप्तिमेतु कथम् ।
अद्यापि न समतीतः
सुमहान् कालो हि वः प्रजातानाम् ॥

३

ननु वसत वासरानिह
कतिचिन्नेत्रोत्सवाय मनुजानाम् ।
वितनुत मधुरं मन्दं
ह्रिया स्मितं स्वैरमन्ततो यात ॥

४

घटिकामर्धघटीं वा
नन्दयितुं मानवान्नु जाताः किम् ।
यत्सहसैवं हित्वा
पदं निजं प्रस्थिताः परमिदानीम् ॥

५

अतिकरुणास्पदमेतत्
प्रसूय यद्बोऽत्र सृष्टिजननीयम् ।
प्रकटीकृतविविधगुणान्
विनश्यतो वीक्षतेऽचिरादेव ॥

६

नितान्तरमणीयाना—
मपि वस्तूनामकाण्डभङ्गुरताम् ।
ज्ञापयथ यूयमिह नो
नीतेन निजात्मना निदर्शनताम् ॥

७

तानीमानि कियन्त्यपि
दिनानि निजवैभवं प्रदर्श्य किल ।
यूयमिव यान्ति विलयं
सहसा विरहाकुलान् विधाय जनान् ॥

## पञ्चत्रिंशं रत्नम्

## नाहं त्वां कामये

नाहं त्वां कामये। तव न वचो मानये ॥ ध्रु० ॥

१

त्वयि तु विदूरे सुतरां दूये
न हि विरहं रोचये ॥

२

दिवि दृष्ट्वेमा रुचिरास्तारा
मत्सरितां धारये ॥

३

मा दर्शनजां मुदमनुभूव-
न्निति चित्ते चिन्तये ॥

४

त्वच्चरितं मे किं प्रियमखिलं
तन्नाहं तर्कये ॥

५

रहोगताहं किं निश्वासैः
कति रजनीर्यापये ॥

६

येषु स्नेहो न विना त्वां ते
मम मनसः प्रीतये ॥

७

किं वचनं ते मञ्जुलरचनं
स्नेहादाकर्णये ॥

८

तदनुरणनमनिशं श्रुतियुगले
त्वद्विरहे भावये ॥

९

अन्यप्रियजनवचनैर्भग्ने
सौख्येऽस्मिन् शुचमये ॥

१०

अपनिद्रे निशि गगने नयने
असकृदहं स्थापये ॥

११

नीलरुचिरगम्भीरलोचनं
पुरतस्त्वां लक्षये ॥

१२

न कामये त्वामिति निजवचनं
स्पष्टं त्वां श्रावये ॥

१३

कथमन्येषां तव चात्रार्थे
प्रत्ययमुत्पादये ॥

---

## षट्त्रिंशं रत्नम्

## गुणवती निधनम्

---

१

कुले विशाले किं जनुषा ।
दिव्यतमेन च किं वपुषा ॥

२

किंगुणमखिलं गुणजालं
किंफलमभिमतमपि शीलम् ॥

३

सदपि सकलमिदमयि दयिते ।
प्राणान्ते शरणं न हि ते ॥

४

अपनिद्रे निशि मम नयने ।
अश्रुमोक्षणे कृतक्षणे ॥

५

त्वन्मुखशशिनो हि दर्शने ।
कुत आशा मे सुलोचने ॥

६

स्मृतिसुखमनुभवतैव मया ।
निःश्वासै रजनी नेया ॥

---

## सप्तत्रिंशं रत्नम्
## विद्वद्वचनानुवादः

---

१६६

पातकानि भुवि सन्ति कानिचिद्
 यानि यान्ति जयदानि मान्यताम् ।

१६७

पादं क्षिपन् पृष्ठत एव सम्यग्—
 झम्पां प्रदातुं पुरतः समर्थः ।

१६८

पितरो गौरवभाजो ममेति यन्मान इष्यते पुंसा ।
 तदतिहेपणममुना यदि नात्मा पात्रतां गुणैर्नीतः ॥

१६९

पुरतो लिहन्ति मक्ष्गं पश्चाद्विलिखन्ति मार्जाराः ।
 स्तुतिपाठका अपीमा- मेवानुसरन्ति परिपाटीम् ॥

++ ++ ++ ++ ++ ++ ++ ++

166

Success makes some species of crimes honourable. SENECA.

167

To step back in order to leap better.
FRFCH PROVERB.

168

It is a shame for a man to desire honour because of his ancestors, and to deserve it by his own virtue. ST. CHRYSOSTON.

169

Flatters are cats that lick befeore, and scrach behind. GERMAN PROVERB.

१७०

पुरुषस्य कीर्तिमपमार्ष्टुमलं
सुचरिते स्खलितमेकमपि ।

१७१

प्रकृताववतिष्ठते यदा
कुपितः कुप्यति हा वृथात्मने ।

१७२

प्रजातन्त्राणि राज्यानि नाशं यान्त्यतिभोगतः ।
राजतन्त्राणि नश्यन्ति प्रायो दारिद्र्यदोषतः ॥

१७३

प्रणयेन समं प्रजायते
नरनारीषु सदैव मत्सरः ।
न पुनर्नियमेन नश्यति
बत तेनैव सह प्रणश्यता ॥

++ ++ ++ ++ ++ ++ ++ ++

170

One stumble is enough to deface the character of an honourable life. L. ESTRANGE.

371

When an angry man returns to himself, he is angry with himself. PUBLIUS SYRUS.

172

Luxury ruins repblics ; poverty monarchies. MONTESQUIEU.

173

Jealousy is always born with love, but it does not always die with it. LA ROCHE.

१७४

प्रथमे च द्वितीये च तृतीये च दिनेऽतिथिः ।
देवभूतो भारभूतः शल्यभूतो भवेत् क्रमात् ॥

१७५

प्रयस्यत सदा धृतिं वत कदापि मा मुञ्चत
प्रजागृत निजास्थितौ स्तुत च कामदं श्रेयसे ।

१७६

प्रहर यावदभितप्तमयः ।

१७७

प्राङ् निजनिधनाद्बहुशो
भीरूणां मरणयातना भवति ।
शूराणां सकृदेव तु
मरणानुभवस्तनुत्यागे ॥

174

The first day a man is a guest, the second a burden, the third a pest. LABOULAYE.

175

Toil on, faint not, keep watch, and pray.
BONAR.

176

Strike while the iron is hot. PROVERB,

177

Cowards die many times before their deaths:
The valiant never taste of death but once
SHAKESPEARE.

१७८

प्राज्ञः प्रस्रवणोपमो निगदितो विद्वांस्तडागोपमः ।

१७९

प्राय ईश इह दासमणस्य
मानुषस्य हृदयं न बिभर्ति ।

१८०

प्रायो न सख्यं समवृत्तिभाजोः ।

१८१

प्रेमज्योतिः कृशं नश्येद्विरहानिलरंहसा ।
ऊर्जितं तु विवर्धेत तेनेत्यद्भुतं कियत् ॥

---

178

A learned man is a tank; a wise man is a spring. W. R. ALGER.

179

The master of slaves has seldom the heart of a man. HENRY MACKENZIE.

180

Two of a trade seldom agree. PROVERB.

181

Absence is to love what wind is to fire; it quenches the small flame and quickens the large.

BUSSY.

---

# अष्टात्रिंशं रत्नम्

## विरहगुणाः

१

रे चिराय विरहानल ज्वल
स्वं बलं सकलमेव दर्शय।
दूरतो भवतु मे प्रिया क्वचिद्
विक्रियां न मम मानसं व्रजेत्॥

२

अन्तराणि किल सत्त्वशालिनां
संयुनक्ति विरहोऽन्तरादपि।
अस्थिरोऽपि किल काल आदरात्
सुस्थिराणि विदधात्यसूनि च॥

३

ईदृशी प्रियतमाहमीदृशो
यादृशस्त्वमसि तादृशो भव।
तद्गतस्य हृदयस्य मे कुतः
शक्तिरस्ति तव दाहकर्मणि॥

४

यत्र यत्र किल तां यदा यदा
वीक्षितुं मम मतिः प्रजायते।
तत्र तत्र नियतं तदा तदा
साधिरोहति मनोरथं मम॥

५

देहभेदवशतो वियोगिना-
मेकतां तु हृदयेन बिभ्रताम् ।
यो वियोग इति गण्यते जनैः
सोऽपि योग इति भाति तत्त्वतः ॥

६

नेन्द्रियाणि गतिमन्ति मे बहि-
र्गत्वराणि भृशमन्तरेव तु ।
गूहतेव निधिमत्र तद्गता
तत्समागमसुखं मयाप्यते ॥

७

लोकलोचनपथं विहाय सा
गोचरीभवति नेत्रयोर्मम ।
लाभ एव ननु मे महानयं
यज्जनेऽपि रहसीव तां लभे ॥

८

चुम्बनं च परिरम्भणं तथा
निर्विशङ्कमिह नौ प्रवर्तते ।
निर्विशामि विजहामि चापि तां
संगतां निजपदादनुच्चलन् ॥

---

# नवत्रिंशं रत्नम्

## जीमूतः

तृषातुराणां कुसुमोत्कराणां
कृतेऽम्बुधीनां सरितां च मध्यात् ।
नवाम्बुधारा अहमाहरामि
वर्षासु वर्षासु विराजमानः ॥ १
मध्याह्नसूर्यातपतापितानां
द्रुमच्छदानां किल निद्रितानाम् ।
छायां सुखायात्मनोस्तनोमि
नभोविताने विचरम् सुखेन ॥ २
विहङ्गचारं चरतो जवान्मे
पक्षाभिघातेन विक्षुभ्यमानाः ।
नभस्तलाच्छीतरसं किरन्तः
स्थूला अवश्यायकणाः पतन्ति ॥ ३
हिरण्यगर्भं परितो भ्रमन्त्या
आन्दोल्यमाना धरणीजनन्याः ।
ये निद्रिता वक्षसि कोरकास्तान्
स्पृशन् कणैस्तैः प्रतिबोधयामि ॥ ४
कृषीवलाः कण्डनदण्डघातात्—
धान्यैर्यथा निस्तुषितैर्विकीर्णैः ।
तथा समग्रान् हरितान् प्रदेशान्
वर्षोपलौघैर्धवलीकरोमि ॥ ५

विद्राव्य भूयोऽपि कुतूहलेन
वर्षोपलांस्तान् जलतां नयामि ।
दिवौकसां वर्त्म च गाहमानः
स्वगर्जितैस्तन्व इवाट्टहासम् ॥ ६

माता मदीया धरणी जलाढ्या
तेजोमयी द्यौर्विदिता च धात्री ।
सौदामनी मां दयितानुयाता
श्रेयो मयान्यत्किमितोऽपि लभ्यम् ॥ ७

पयोनिधीनां सरसां नदीनां
धराधराणामपि काननानाम् ।
उपर्यहं स्वैरगतिश्चरामि
हरन् दृशं कौतुकिनां जनानाम् ॥ ८

निपीय तोयं लवणं पयोधे—
र्दिवाकरेणात्मकरैः प्रदत्तम् ।
निजोदरे स्वादु विधाय भूम्यां
सृजामि तत् प्राणिहिताय भूयः ९

कृतोन्नतिं मां समये विलोक्य
नीलाम्बरे स्वात्मरुचा स्फुरन्तम् ।
मृदङ्गनादं च समुन्नदन्तं
नृत्यन्ति हर्षाद्विपिने मयूराः ॥ १०

क्षणे क्षणेऽहं विकृतिं भजामि
म्रिये कदाचिन्न तु कामरूपः ।
सनातनोऽहं किल नीलवर्णो
वहामि विष्णोरुपमानभावम् ॥ ११

---

# चत्वारिंशं रत्नम्

## विद्वद्वचनानुवादः

१८२

बधिराणां बधिरोऽसौ यः शृण्वन्नपि शृणोति न हि गदितम्

१८३

बहवः प्रतिभान्विता अपि विकलत्वात्किल जोषमासते ।

१८४

बहुमूल्यं विना मूल्यं निष्पाद्यं सुप्रियं वचः ।

१८५

बिभासासि यथा लोके तथाभ्यासवशाद्भव ।

१८६

बिभेति मरणान्न यो न हि बिभेत्यसौ तर्जनात् ।

182

None is so deaf as he who would not hear.

PROVERB.

183

Many have genius,
But wanting art are for ever dumb.

LONGFELLOW.

184

Kind words are worth much and they cost little.

PROVERB.

185

Study to be what you wish to seem.

JOHN BATE.

186

He who fears not death fears not threats.

CORNEILLE.

१८७

बुद्धिगम्यसुखास्वादो भाजनं गुणसंततेः ।
आस्पदं सर्वदोषाणामिन्द्रियार्थोपसेवनम् ॥

१८८

भयमपेक्षितं सामिपरिहृतम्

१८९

भयवशाच्च भवेद्विमुखोऽन्तकात्—
न च मुधाभिलषेत्तदुपागमम् ।

१९०

भव त्वं प्रभुरर्थस्य मार्थस्ते भवतु प्रभुः ।

१९१

भाव्यर्थगर्भं भवदर्थजातम् ।

187

In the pursuit of intelectual pleasure lives every virtue; of sensual every joy. GOLDSMITH.

188

A danger foreseen is half-avoided. PROVERB.

189

Neither fear nor wish for your last day.

MARTIAL.

190

Let not your money become your master.

PROVERB.

191

The present is big with coming events.

LEIBNITZ.

१९२

भास्करश्च यमश्चापि पितापुत्रावुभावपि ।
न केनापीक्षितुं शक्यं संमुखे बद्धदृष्टिना ॥

१९३

भूयसार्थी वित्तहीनः सर्वेणार्थी तु लोभवान् ।

१९४

भोजनं जीविताथास्तु भोजनाय न जीवितम् ।

---

192

Neither the sun nor death can be looked at fixedly. LA ROCHE.

193

Proverty is in want of much, avarice of everything. PUBLIUS SYRUS.

194

Live not to eat, but eat to live. PROVERB.

---

## एकचत्वारिंशं रत्नम्

# मनस्विमनीषितम्

भक्तमनोरथकल्पतरुः
कामामिमं मम पूरयतात् ।
बद्धाञ्जलिरिदमेव वृणे
नास्मादधिकं मे दिशतात् ॥ १

निर्द्रव्योऽयमितीह जनो
मां न कदापि तिरस्कुरुतात् ।
न चापि बहुधनमत्त इति
मत्सरमग्नमना भवतात् ॥ २

कर्म सदैव मम श्रेयो
महतः केवलतो भवतु
लोकमान्यता तत्करणात्—
अल्पापि च मामुपनमतु ॥ ३

अविदित एव वरं पुरुषो
न च विदितो यशसा मलिनः ।
दुरितं निधनेऽप्यनुयाति
स्मरति न सुकृतं कोऽपि जनः ॥ ४

सच्छीलैर्वरमल्पतरैः
परीक्षितैः संगतं कृतम् ।
अविदितशीलैर्न तु बहुभिः
सख्यं परिचयतो घटितम् ॥ ५

ग्रन्थैः पठितैर्यातु दिनं
न तु वृत्त्यर्थं व्यापारैः ।
गाढनिद्रया व्रजतु निशा
नोद्वेगकरैः प्रजागरैः ॥ ६

भवतु कुटीरसमे सदने
वासो न पुनर्हर्म्यसमे
उपयोगाय न भोगाय
यत्स्यात्तेनैवेह रमे ॥ ७

संचारो मे भवतु सुखो
निसर्गरमणीये विपिने ।
नरकरसंवर्धितद्रुमे
मम धी रमतां नोपवने ॥ ८

इयं सुस्थितिर्विहृतिरियं
निर्वृतिरियमनुपमा भुवि ।
यदीदृशी जीवितरीति-
र्वृता मया श्रेयसे दिवि ॥ ९

एवं चरतो दीर्घतरं
ध्रुवमायुर्मे भविष्यति ।
सम्यग्गमयति यो हि वय-
स्तत्तस्य द्विगुणीभवति ॥ १०

एवं सति मे कुतो भयं
किमपेक्ष्यं च ममेह फलम् ।
यत्कार्यं तत्कृतमिति धी-
र्ननु मामानन्दयितुमलम् ॥ ११

---

## द्वाचत्वारिंशं रत्नम्

## पूर्णेन्दुसमा

---

१

एषि दिनान्ते यासि निशान्ते
त्वं किल कान्ते पूर्णेन्दुसमा ॥

२

तमोविनोदिनि नयनानन्दिनि
त्वं किल कामिनि पूर्णेन्दुसमा ॥

३

सुधाभिवर्षिणि चित्ताकर्षिणि
भवसि विलासिनि पूर्णेन्दुसमा ॥

४

निधिः कलाना – मभिरामाणां
त्वं रामाणां पूर्णेन्दुसमा ॥

५

स्पर्शसुखं मे वितरसि रामे
पूरितकामे पूर्णेन्दुसमा ॥

६

मलयजमङ्गे वितरसि सङ्गे
दाहविभङ्गे पूर्णेन्दुसमा ॥

७

सौम्याकारे परमोदारे
त्वं संसारे पूर्णेन्दुसमा ॥

---

# अथ चत्वारिंशं रत्नम्
## हितोपदेशः

यावद्विरमसि न जीवनात्
तावन्मा विरमाध्ययनात् ॥ १
कलय विफलमिह दिवसं त्वं
किंचन यस्मिन्नाधीतम् ॥ २
यत्पठितं तन्नवीकृतम्
यदि न नवां सुषमां गमितम् ३
सहायुषैव न यदि याता
वृद्धिं विद्या समधिमता ॥ ४
यदि न प्राज्ञतरोऽनुदिनं
भवसि सखे धिक् तव जननम् ॥ ५
बहु पठनं चिन्तनहीनं
त्याज्यं भवति यथात्यशनम् ॥ ६
ग्रस्तं यत्परिणमेत् सुखं
विशतु हिताय तदेव मुखम् ॥ ७
मौदरिको भूर्बह्वाशी
मोहादात्मायुर्नाशी ॥ ८

## पञ्चचत्वारिंशं रत्नम्

## नासाग्रप्रणयी विधुः

---

१

अधरसुधा प्रभवति तव विधुनिभानने ।
गिरिशनयनदहनदग्धमदनजीवने ॥

२

इदमवेक्ष्य रजनिकरोऽमृतमयः स्वयम् ।
वारयितुं क्षयजनिधनविषयकं भयम् ॥

३

मौक्तिकच्छलेन हेमसूत्रलम्बितः ।
तत्पिपासया त्वदीयनासिकां श्रितः ॥

४

कुरु करुणां शरणार्थी भजतु स स्थितिम् ।
भार एष इति कदापि मा कृथा मतिम् ॥

५

नासिकाग्रमण्डनस्य भव सुमण्डनम् ॥
मृदुहृदये मास्य कुरु प्रणयखण्डनम् ॥

---

# षट्चत्वारिंशं रत्नम्

## इङ्गितम्

मामकं हतहृदयं धारय ॥ ध्रु० ॥

प्रतिदिनमिह सखि स किमायाति ।
किमिति क्षणमिव विलम्ब्य याति ॥ १

तदन्तिकं द्रुतमित उपयाहि ।
कुसुममलकगतमेतद्देहि ॥ २

प्रहितं केन जनेनेति स चेत् ।
सादरमसकृदपि त्वां पृच्छेत् ॥ ३

नार्हसि सखि मन्नाम कथयितु ।
स हि केवलमायात्यपगन्तुम् ॥ ४

तरुवरमूले रजसां निकरे ।
स चिरं सीदति सरसस्तीरे ॥ ५

धूलिपटलमयि सत्वरमपनय ।
सकुसुमकिसलयशयनं विरचय ॥ ६

तदीयखेदं नयने वदतः ।
खेदं मम हृदि चापि जनयतः ॥ ७

कथयति नासौ निजाधिहेतुं ।
केवलमायाति चापगन्तुम् ॥ ८

# सप्तचत्वारिंशं रत्नम्

## निद्रागीतम्

अयि बालक भो नयनमनोहर
संविश शयने संविश सुरुचिर ॥ ध्रु० ॥

निजजननन्दन नन्द निशायां
स्वापसुखं निर्विश सुखसागर ॥ १

शोकपदं न हि जातु शिशवं
मैवं कुरु रुदितं करुणस्वर ॥ २

अभिलषितं तव भवति सुपूरं
निष्कारणमृदुहासितयुताधर ॥ ३

प्रकटीकृतबालोचितविभ्रम-
मङ्गमिदं ललितं तव सुन्दर ॥ ४

अयि सुकुमारतनो मत्स्पर्शो
मनसि मुदं तनुत तव शिशुवर ॥ ५

भाति कपोले स्मितच्छटा ते
स्फुरति च हृदयं प्रमोदनिर्भर ॥ ६

शिशुशय्यायां यावच्छेषे
तावदेव भव कृती गतज्वर ॥ ७

जाग्रदायतौ संसृतिमार्गे
शैशवगतसुखमखिलं विस्मर ॥ ८

# अष्टचत्वारिंशं रत्नम्

## विद्वद्वचनानुवादः

१९५

मतिमती न तथा रमयेन्मतिं सहृदया पुरुषस्य यथाङ्गना।
न हि जपाकुसुमं धवलं तथा भवति लोचनलोभि यथारुणम्॥

१९६

मनोरथशतैः प्राप्तं श्रेयोऽत्र मधुरायते।
स्वर्गेऽपि स्वर्गता न स्यात् तद्भोगापूर्वता न चेत्॥

१९७

महान्तो गिलन्तो लघून् स्वैरमेव
मनुष्याः स्थले सन्ति मीना जले च।

१९८

मानः प्राणसमः सकृद्विगलितो नैवाप्यते जातुचित्।

++ ++ ++ ++ ++ ++ ++ ++

195

The brain-womtn never interest like the heart-women; whiee roses please less than red. HOLMES.

196

'Tis expectation makes a blessing dear;
Heaven were not heaven, if we knew what it were.

SIR JOHN SUCKLING.

197

Fishes live in the sea,......as men do on land—the great ones eat up the little ones.

PERICLES II—I.

198

Honour, like life, when once it is lost is never recovered, PUBLIUS SYRUS.

१९९

मूर्खो मूर्खतरं सदैव लभते यः श्लाघते तद्गुणान् ।

२००

मूल्येन महता क्रीतमित्येव न महीयते ।
लोके वस्तूपयोगेन महतीति महार्हताम् ॥

२०१

मृता अपि न ते मृता मृतिपरं न ये विस्मृताः ।

२०२

मेघैर्वृतं चेन्न कदाचिदम्बरं
सूर्यातपं निर्विशतां कुतो रतिः ।

२०३

मोहयन्तीं सुदूरस्थान् वञ्चयन्तीं समीपगान् ।
मायां कांचिद्विनिर्माति सुखं मृगजलं यथा ॥

++ ++ ++ ++ ++ ++ ++ ++

199

A fool always finds a greater fool to admire him. BOILEAU.

200

A thing is worth what it can do for you, not what you choose to pay for it. RUSKIN.

201

Our dead are never dead to us until we have forgotten them. GEORGE ELIOT.

202

If there were no clouds we should not enjoy the sun. PROVERB.

203

Happiness is like mirage in the desert; she tantalises us with a delusion that distance creates and that contignity destroys. ARLISS LIT. COL.

२०४

यच्चिन्तितं यद्विदितं यन्मतं चोररीकृतम् ।
निष्फलं परिणामे तत् कृतिरेव गुणाय यत् ॥

२०५

यत्करणीयं तन्निश्चेयं यच्च निश्चितं तत्करणीयम् ।

२०६

यत्परकीयं तद्यो लुभ्यति तस्य स्वीयं स्थाने नश्यति ।

२०७

यत्र शिरो हृदयाद्विगुणं तद्धृदयतश्च करो विगुणः ।
यत्र पुनस्त्रितयं समितं सैव कला ललिता गदिता ॥

---

+ + + + + + + +

204

What we think, or what we know, or what we believe, is in the end of little consequence. The only thing of consequence is what we do. RUSKIN.

205

Resolve to perform what you ought; and perform without fail what you resolve. FRANKLIN.

206

He who covets what is another's deservedly loses what is his own. PHŒDR.

207

Fine art is that in which the hand, the head and the heart of man go together, the head inferior to the heart and the hand inferior to both heart and head. RUSKIN.

---

## नवंचत्वारिंशं रत्नम्
## दीपिका

१

आशादशाभिर्दशभिर्निजाभि-
दिवा द्रवस्नेहमुपाददाना ।
देदीप्यते व्योमनि दीपिकेयं
प्रकाशयन्ती भुवनं स्वधाम्ना ॥

२

सदागतौ वाति सदान्तरिक्षे
निर्वाणमभ्येति कदापि नेयम् ।
हा हा निशायां समुपस्थितायां
विपत्तिरेनां स्वपदीकरोति ॥

३

दिवा निगीर्णं तिमिरं समस्तं
नक्तं मसीस्तोममिवोद्वमन्ती ।
विपद्यते हा भुवनं निमज्ज्य
गाढेऽन्धकारे स्ववियोगजन्ये ॥

४

निशावसाने तिमिरं व्यपैति
दिनोदये तेज उदेति भूयः ।
पर्यायपाती सुखदुःखभोगो
मा भून्मुधा हर्षविषाददहेतुः ॥

## पञ्चाशं रत्नम्

# प्रियां प्रति

---

कर्णोपान्तविलोलं मां कुण्डलं कुरु वल्लभे ।
त्वत्कपोलसुखस्पर्शाद्यथा स्यां कृतिनां कृती ॥ १

मेखलाभावमासाद्य मध्यस्थोऽहं सुमध्यमे ।
सोच्छ्वासं हृदयं सम्यक् तव संस्तम्भयामि वा ॥ २

हन्त कण्ठगतो हारो भूत्वा वापि दिवानिशम् ।
पातोत्पातान् करिष्यामि सकम्पे तव वक्षसि ॥ ३

तत्रस्थो लाघवान्नाहं कदाप्युन्मोचनीयताम् ।
यास्यामि तव तन्वङ्गि धास्यामि सुखवाह्यताम् ॥

यदि नूपुरतां प्राप्य भजेयं चरणं तव ।
तदा खलु सुखासीनो गायेयं मधुरस्वनम् ॥ ५

त्वन्नासाभूषणालम्बिमौक्तिकत्वमवाप्य वा ।
पास्याम्यधरपीयूषं क्षयवारणकाम्यया ॥ ६

येन केन प्रकारेण शरणं भव मे प्रिये ।
प्रणयं प्रतिपद्यस्व तूर्णं यावदहं म्रिये ॥ ७

---

## एकपञ्चाशं रत्नम्

# मोहमहिमा

१

कस्तूरीमृग दिशि दिशि धावसि
यत्सविधे तद्विपिनेऽन्विष्यसि ॥

२

सौरभमनुपममपि नाभिगतं
न विद्यमानं तव किं विदितम् ॥

३

अहह सखे त्वां न दूषयामि
मोहमहमपि त्वमिव भजामि ॥

४

नैशे तिमिरे परितो मूर्च्छति
रौद्रतरेऽपि च वाते वाति ॥

५

भ्रष्टपथोऽहं स्वैरमटामि
क्व यातव्यमित्यपि नावैमि

६

यदलभ्यं तद्यते मृगयितुं
यदमृग्यं तल्लभेऽनुभवितुम् ॥

७

इदमधुना तु मया विज्ञातं
यदभीप्सितमिह तत्स्वायत्तम् ॥

# द्वापञ्चाशं रत्नम्

## कृमिः

---

रे बटोऽपसर दूरतो मनाङ्
   मा निधाः सरभसं पदं पुरः ।
सर्पतीह कृपणः कृमिर्भुवि
   चूर्णितः स बत मृत्युमेष्यति ॥ १

यं सहेलमनुपश्यतस्तव
   नो करोति करुणा पदं हृदि ।
सोऽपि किं त्वमिव वेधसादरा—
   न्न व्यधायि दिशतात्मचातुरीम् ॥ २

येन सृष्टमखिलं चराचरं
   यस्तत्रापि किल जीवकारणम् ।
तेन सोऽपि करुणार्णवेन किं
   न प्रसादलवभाजनीकृतः । ३

जीवमात्रसुखसाधनाय किं
   तारका न विधिना विनिर्मितः ।
भूतये कृमिकुलस्य भूरपि
   किं तवेव न तृणाङ्कुरावृता ॥ ४

दैवलब्धसुखलेशसेविनः
   स्वं नयन्तु कृमयोऽल्पजीवितम् ।
नो सहेलमपहर्तुमर्हसि
   तद्बटो यदसि दातुमक्षमः ॥ ५

---

## त्रयःपञ्चाशं रत्नम्

## शशिमुखी

---

शशिमुखि तव मुखशशिगलितम् ।
वागमृतं । सुखयति । श्रुतिपुट— ।
मिदमिति मुदमुपयामि । सुखितो भवामि ॥ शशि० ॥
मन्दहसितमधरपुटे भाति ।
किसलय इव सुमततिः सुदति ।
नीरजाक्षि सफलतां च । नयनयुगलमद्य याति ॥शशि०॥

---

## चतुष्पञ्चाशं रत्नम्

# दुराराधा

अयि कामुक किं वदनं वहसि पाण्डुरं
वद वद किं वपुरिदमपि भवति कृशतरम् ॥ध्रु०॥

१

तव हृदये निवसति या मानसप्रिया
सुमुखेऽपि त्वयि याभूद्धन्त निर्दया
दुर्मुखता किं प्रदर्येद्वद तदन्तरम् ॥

२

किं विमना मौनमिदं बत निषेवसे
मधुरगिरापि न याऽस्थाज्जातु तव वशे
किमवचनं वशयेत्तां ब्रूहि सत्वरम् ॥

३

मा मैवं चर चरितं ह्रीपदं परं
संजहाहि मार्गमिमं खेदनिर्भरं
तच्चित्तग्रहणविधिं कलय दुष्करम् ॥

४

स्वयमेव न यदि सेयात्त्वयि रते रतिं
योजयितुं त्वयि नालं किमपि तन्मतिं
प्रतिनिविष्टचित्ताया हा मनः स्थिरम् ॥

# षट्पञ्चाशं रत्नम्

## दर्पदलनम्

---

१

वाक्पाटवमधिगतमतुलम् ।
बत विफलीभूतं सकलम् ॥

२

न हि लब्धं श्रेयोमूलम् ।
हा हृदयं जातं विकलम् ॥

३

मदन्तरं को जानीयात् ।
अभिमानं दूरीकुर्यात् ॥

४

गौरवजनितो मेऽतिमहान् ।
गर्वो मनसि पदं कृतवान् ॥

५

येन गतिर्मे खिलीकृता ।
सर्वसमुन्नतिरन्तरिता ॥

६

अपहर गर्वमखर्वं मे ।
हर विषयेषु पुनर्न रमे ॥

---

## सप्तपञ्चाशं रत्नम्

## नीतिः

हा हा नीतिर्जगतो विलयमिता ॥ध्रु०॥

१

सत्यमसत्यमसत्यं सत्यं नयवशतो भवति।
सत्यमपि च यः सत्यं वदति स नाशं समुपैति ॥

२

यद्यो हरति स तस्य स्वामी स्वामी न स्वामी।
स्वीयोऽप्यर्थो बत विधियोगाद्भवति च परगामी ॥

३

क्रन्दन्त्यनुदिनमधिगतदण्डा निरागसो बहवः।
नन्दन्ति च कति कृतापराधा नयपथ एप नवः।

४

समयरक्षणं भवति लक्षणं पौरुषहीनानाम्।
निर्लज्जतया सङ्गरभङ्गश्चिह्नं शूराणाम् ॥

५

विलयमिमं नय दुर्नयमखिलं जगदभयं भवतु।
सर्वोऽपीह सुखेन सदा परमेश जनो वसतु ॥

## अष्टापञ्चाशं रत्नम्

# प्रियादर्शनम्

---

दर्शनं त्वदीयं सुखदं ।
किमथवा भवति मे भयदं ॥ सुन्दरि ॥ १
सुकुमारं कण्ठमृणालं ।
शोभते तत्र मुखकमलं ॥ सुन्दरि ॥ २
तव कपोलयोः सुमृदूनि ।
विकसन्ति जपाकुसुमानि ॥ सुन्दरि ॥ ३
नवपल्लवमोष्ठपुटे ते ।
मृदुलातिके कृतपदमास्ते ॥ सुन्दरि ॥ ४
भ्रमयसि ये नयने परितः ।
तौ तेजोगोलौ भातः ॥ सुन्दरि ॥ ५
यः कणस्ततः समुदेति ।
स हि हृदयं मम निर्दहति ॥ सुन्दरि ॥ ६
केशास्तव सर्पशिशूना-।
मनुहरन्ति किल कालानां ॥ सुन्दरि ॥ ७
यान्मुञ्चसि कटाक्षबाणान् ।
व्याकुलान् कुर्वते प्राणान् ॥ सुन्दरि ॥ ८
न तु निधनात् किमपि बिभेमि ।
यदधरामृतं प्राश्नामि ॥ सुन्दरि ॥ ९

---

## नवपञ्चाशं रत्नम्

## विद्वद्वचनानुवादः

२०८

यथा यथा श्रीरुपगूहते दृढं
तथा तथा मुह्यति मूढमानसः ।

२०९

यथा यथास्तोन्मुखतामुपैति
तारुण्यसूर्योऽखिलमानवानाम् ।
तथा तथा वृद्धिमती तदीया
छायेव तृष्णा भवति क्रमेण ॥

२१०

यथा पुमानन्यरहस्यरक्षणे
यथैव वा स्त्री स्वरहस्यरक्षणे ।
तथा समर्थो न स सा च रक्षितुं
निजं रहस्यं परकीयमेव च ॥

++ ++ ++ ++ ++ ++ ++ ++

208

The more riches a fool has, the greater fool he is. ANONIMOUS.

209

Like our shadows
Our wishes lengthen as our sun declines. YOUNG.

210

A man can keep another's secret better than his own, a woman her own better than another's.

LA BRUYERE.

२११

यथा स्वयमजानानां सुकरं ह्यात्मवञ्चनम् ।
अविज्ञातं तथा पुंसां दुष्करं परवञ्चनम् ॥

२१२

यदनिश्चितं भवति वस्तु भुवीह
तदविद्यमानमवधारयितव्यम् ।

२१३

यदपचितं ह्युपचेतुमशक्यं
तत्सुधिया न कदाप्यपचेयम् ।

OR

न हि न हि तत्संहार्यं न संहृतं शक्यते यदुद्धर्तुम् ।

२१४

यदात्मनः परिहीयते तदन्येष्वभिनन्दामः । स्पृहयामश्च स्वीयेतरां यां कांचिदवस्थामुपगन्तुम् ।

++ ++ ++ ++ ++ ++ ++ ++

211

It is easy to deceive one's self without perceiving it, as it is difficult to deceive others without their finding it out. LA ROCHE.

212

What is uncertain is to be treated as non-extant. LAW.

213

Mar not, what, marred, cannot be mended.
PROVERB.

214

We love in others what we lack ourselves,
And would be everything but what we are.
R. H. STODDART.

२१५

यदात्मन्येव रज्येथास्त्वां द्विष्युर्बहवोऽपरे।

२१६

यदा वागायासः प्रभवति न चित्तग्रहविधौ
तदा मौनं प्रायो ह्यनुपधि विशुद्धं विजयते

२१७

यदा विक्रयं कर्तुमन्यस्य काम—
स्तदैव क्रये साधु कार्या प्रवृत्तिः।

२१८

यदा शक्यं तदा कन्या तनयं तु यदेच्छति।
विवाहयेत् पिता नैवं याति लोकस्य हास्यताम्॥

++ ++ ++ ++ ++ ++ ++ ++

215

Love thyself and many will hate thee.

ANONIMOUS.

216

The silence often of pure innocence
Persuades when speaking fails.

SHAKESPHEARE.

217

It is well to buy when another wishes to sell.

ITALIAN PROVERB.

218

Marry your son when you like, your daughter when you can.

FRENCH PROVERB.

२१९

यदि नान्नं सुपर्याप्तं लभ्यते निर्धनैः सदा ।
ग्रस्यते धनिकैस्तावद् यावत् प्रायो न जीर्यति ॥

२२०

यद्यप्यकष्टसाध्यं स्यात् कुटुम्बोदरपूरणम् ।
आरोग्यार्थं शरीरस्यं कष्टमिष्टं सदास्तु ते ॥

२२१

यद्यथा गृह्यते येन तत्तथा तस्य जायते ।

२२२

यद्विना जीवितुं शक्यं बद्धास्थस्तत्र मा भव ।

२२३

यन्न कृतं स्वयमेव न तत् साधु कृतं जडधीर्मनुते ।

++ ++ ++ ++ ++ ++ ++ ++

219

If the poor man cannot always get meat; the rich man cannot always digest it. HENRY GILES.

220

Love labour; for if thou dost not want it for food, thou may'st for physic. WM. PENN.

221

Everything is as you take it. PROVERB.

222

That which we may live without we need not much covet. PROVERB.

223

The fool thinks nothing well-done except what he does himself. ANONIMOUS.

२२४

यः शुनको दशति वृथैव स न भषति ।

२२५

यः सततं परिदेवयते ।
कः किल तस्य कदा दयते ॥

२२६

यः सर्वस्य सखा नाम प्रायः कस्यापि नैव सः ।

२२७

यः प्रणयस्य प्रथमः प्रज्ञाया अन्तिमः स निःश्वासः ।

२२८

यावती तुङ्गता येन भवनस्य चिकीर्ष्यते ।
तावती मूलबन्धेऽपि तेन कार्यावगाढता ॥

++ ++ ++ ++ ++ ++ ++ ++

224

A dog that bites does not bark in vain.

ITALIAN PROVERB.

225

He who makes constant complaint gets little compassion. PROVERB.

226

A friend to everybody is a friend to nobody.

PROVERB.

227

The first sigh of love is the last of wisdom.

ANTOINE BRET.

228

The loftier the building, the deeper must the foundation be laid. THOMAS A KEMPIS.

